भूतादिना गृहीत इव । **युगं** ( ४ ) वाहनस्कन्धगं दारु । **रथेषा** ( ५ ) रथ-दण्डः । **कूबरो** ( ५ ) युगं रथाश्रितं कीलकम् । **संहताः** ( ५ ) मिलिताः । **संनिपत्य** ( ६ ) मिलित्वा । **प्रभिन्नाः** ( ६ ) मदर[ः स ]हितैः[1] । **तोमराः** ( ७ ) बाणभेदाः । **अविनीताः**[१] ( ९ ) शिक्षिताः । **ऋष्टिः** ( ११ ) शस्त्रविशेषः । **भिण्डिपालैः** ( १४ ) गोफणैः[2] । **परश्वधैः**[3] ( १३ ) परशुभिः । **अविक्षिप्ता**[२]**-नाम्** ( १७ ) उत्क्षिप्तानाम् । **पूतधूतानाम्**[३] ( १७ ) कल्पितानाम् । **प्रेतानां** ( १९ ) पिशाचानाम् । **हयैः** ( २० ) करणभूतैः । **अभि[द्रु]द्रुवुः** ( २० ) संमुखं जग्मुः । **चामरापीडधारिभिः** ( २० ) चामरकलापधरैः । चामरापी-डधारित्वादेव[4] **हंसैरिव** ( २० ) । **प्रासाः** ( २१ ) कुन्ताः । **आशुगाः** ( २१ ) बाणाः । **अग्र्यभवैः**[४] ( २२ ) उत्तमवेगैः । **प्रतिमानेषु**[५] ( २५ ) मुशलेषु । **पुंस्त्वादभिमदत्वात्** ( २८ ) अभितः सर्वतो मदवाहित्वात् । **द्वीपी** ( ३२ ) चित्ररुरुः । पूर्वं **द्वीपिचर्मविधानैः** ( ३२ ) **व्याघ्रचर्ममयैः**[६] ( ३२ ) पश्चात् **विकोशैः** ( ३२ ) । अभिद्रुतादीनि ( cf. ३३ ) त्रीणि मण्डलानि **विदर्शयन्तः** ( ३३ ) । **आक्षिप्य**[७] ( २९ ) आकृष्य । **शब्दगाः** ( २९ ) शब्दे गच्छन्ति । **भग्नसक्थाः** ( ३७ ) भग्नजानवः । **दशनच्छदम्**[८] ( ४१ ) ओष्ठम् । **निष्टचजाः**[९] ( sic ) ( ४२ ) निष्टननशून्याः । **निपतिताः** ( ४३ ) वेगेन गताः । यथा मेरुणा तेन **चन्द्रमा बभौ** ( ४८ ) तथा **पञ्चशीर्षेण**[१०] (४८) **तालेन भीष्मः** ॥

## ४५

[ **गतपूर्वाह्णभूयिष्ठे** ( १ ) ] गतोऽहीनपूर्वाह्णस्य भूयिष्ठो बहुलो भागो

१ Ed. आभिनीताः ; **Cd** by itself. २ Ed. अव° ; **Cd** with Da1 G2. ३ Ed. अवधूतानाम् ; **Cd** corrupt ? ४ Ed. अद्र्यजवैः ; **Cd** by itself. ५ Ed. पाट्यमानेषु ; **Cd** with K3. 5 B3 D2. 3. 6 T2 G1. 2 M **Ca**. ६ Ed. °चर्मशयैः ; **Cd** with Ś1 Ko–2. 5 **Ca**. v. ७ **Cd** with N in reading 29 after 33. ८ Ed. °च्छदान् ; K4 B Dn **Cd** use sing. ९ Ed. निष्कूजाः. १० Ed. °तारेण ; **Cd** with Ś1 Ko–3. 5 D2. 3. 6.

[1] MS. मदराहिं. [2] MS. गोफलैः ; cf. **Cn**. [3] MS. °स्वधैः. [4] MS. °धारित्वात् ; देवहंसै°.



यस्मिन् । **नृत्यतः** ( ६ ) नृत्यत इव । **पिशङ्गैः** ( ७ ) पीतैः । **कर्णिकारेण** ( ८ ) ........ । **पूर्वायतविसृष्टेन**[१] ( ११ ) अत्याकृष्टविमुक्तेन । **शौरिः**[२] ( ? १५ ) अभिमन्युः । **कार्ष्णिः** ( २० ) आर्जुनिः । **बभ्रून्**[३] ( ३७ ) कपि-लान् । [ अवधूतच्छत्रं ( corrupt ) ] । [ Fol. 2*a* ] **एकायनीकुर्वन्** ( ६१ ) एकमार्गान् । **अवहारः** ( ६३ ) युद्धसंहारः ॥ †

## ४६

**कृतेऽवहारे सैन्यानाम्** ( १ ) इत्यादेः **वारणेषु रथेषु च** ( ५६ ) इत्यन्तस्य भीमपराक्रमममृतप्रकारोपायसाधनं तात्पर्यार्थः ॥ **कक्षम्** ( ४ ) बहुतृण-काष्ठं वनम् । **लेलिह्यमानम्** ( ५ ) अत्यर्थं लिहन्तम् । **अप्लवे**[४] ( ८ ) उडुप-शून्ये ( प्रकृतम् ) । **आर्जवेन** ( १९ ) मायादिव्यास्त्रहीनेन । **सखा** ( २० ) इति अर्जुनवाक्यं भावितमुच्चारितुम् ( sic ) । **आदित्यपथं** ( ४२ ) व्योम । **आकाशग इव** ( ४३ ) पक्षीव । **रथचर्यासु** ( ४३ ) । **परमोपेतः** ( ४४ ) परमलक्ष्मीयुक्तः ॥

## ४७

**क्रौञ्चं दृष्ट्वा तथा व्यूहम्** ( १ ) इत्यादेः **तापयानाः परस्परम्** ( ३० ) इत्यन्तस्य क्रौञ्चमुखप्रतीकारविधानं तात्पर्यार्थः ॥

## ४८

**एवं व्यूढेष्वनीकेषु** (४८.१) इत्यादेः **संध्याकाले च वर्तति** (५१.४३) इत्यन्तस्य क्रोधवेगपूर्यमाणस्यार्जुनस्याजेयत्वं तात्पर्यार्थः ॥ **संप्रहारं** ( १ ) युद्धम् । **व्यतिषिक्तं** (५) ...... । अभिभवतीति **अभिभूः** ( ९ ) । **व्यति-करः** ( १० ) मेलकः । **सादिताः** ( ११ ) मानिताः । **विप्रयातं** ( ११ ) पलायितम् । **चञ्चत्** ( १८ ) ...... । **वलाकाः** ( १८ ) कवलाः ( sic ) । **लक्ष्यं** ( ३३ ) शरव्यम् । **सूतसामर्थ्यलाघवात्** ( ५३ ) सारथिसामर्थ्यस्य

१ Ed. पूर्णा° ; **Cd** alone. २ Ed. कार्ष्णेः ; **Cd** seems to have read शौरेः. ३ Ed. क्रुद्धः ; **Cd** with T G4. ४ Ed. अप्लुवः ; **Cd** with Da Dn1 D1. 3. 6. 7. **Ca**. c. † Apparently, **Cd** does not have the Śveta episode.

लघुकारित्वात् । अन्तरं ( ५४ ) छिद्रम् । तर्कयन्तौ ( ५४ ) चिन्तयन्तौ । जज्ञिरे ( ५८ ) ज्ञातवन्तः । आलोकात्[1] ( 163* ) आ संसारस्थितेः ॥

४९

दिष्टं ( २ ) दैवम् । नीडात् ( ५ ) स्थानात् । पुष्पितौ ( २३ ) पुष्पयोगाच्छबलौ बहुलात् । हस्तावापं[2] ( २७ ) हस्तत्राणं शरमुष्टिर्वा । अनवगूढस्य ( २९ ) अवतीर्णस्य । पौरुषं ( ३२ ) पराস्त्रनिषेधे स्वास्त्रे प्रयोगे च सामर्थ्यम् । लाघवम् ( ३२ ) शीघ्रकारिता । अस्त्राणां कालनं[3] ( ३२ ) प्रयोगः ॥

५०

आर्छत् ( ५ ) गतवान् । अथ भीमसेनं समासाद्य चेदीनां सामात्यानामपि बहुभिः कलिङ्गैर्निषादैश्च विमर्दः ( १४ ) आसीदित्यन्वयः । यथा शक्तिः[4] ( १५ ) यथाबलम् । पुरुषकारं कृत्वा ( १५ ) संन्यवर्तन्त चेदयः ( १५ ) इ[ Fol. 2*b* ]त्यन्वयः । संतिष्ठतेषु[5] ( cf. 16 ) व्यावृत्तेषु न निवृत्तः पराभिमुखं गत इति यावत् । तपान्ते[1] ( २० ) वर्षाकाले । सर्वशैक्यायसीं ( २१ ) लोहमयीम् । उद्ब[ब]र्ह ( २४ ) [आ]कृष्टवान् । वृषभस्येदं वार्षभम्[6] ( २५ ) । शातकुम्भमयैः ( २५ ) सौवर्णैः । सर्पविषोपमं ( २६ ) सर्पोपमां कृत्वा विषोपमं प्राणहरत्वात् । अन्तरायुधिनं ( ३६ ) प्रधानयोधम् । आरुग्णो[2] ( ३७ ) भग्नः । सानुमान् ( ३७ ) इति भग्नसानुव्यावृत्त्यर्थं भीमस्योपादानम् । अग्निचक्रमिव आविद्धं ( ३९ ) भ्रामितं येन दृष्टं तेन वेगवत्त्वं च विवक्षितम् । मोहयामास ( ४२ ) अतिलाघवेन सर्वत्रदर्शनलक्षणं मोहमकारयत् । आजौ[3] ( ४३ ) पङ्क्तौ । आप्लुतं ( ४५ ) ..... । केवलप्रसृतं ( ४५ ) सर्वदिक्षु प्रसरणम् । समुदीर्णं ( ४५ ) सर्वत्र शरणम् । संपातं ( ४५ )

१ N ins. 163*. २ Ed. हस्ताच्चापं ; Cd with Ko. 4 B2. 4 Da Dn2 D3. 4. 8 T2 Cc. ३ Ed. लाघवं ; Cd कालनं by itself. ४ Ed. °शक्ति ; Cd with K5. ५ Cd reading for संनिवृत्तेषु ? ६ Ed. आर्षभं ; Cd by itself.

[1] MS. उपान्ते. [2] MS. आरुग्नो. [3] MS. राजौ.



वेगकृतं संयोगम् । समुदायं[1] [च] ( ४५ ) सर्वातिसमुद्यमम् । वियोधाः ( ४७ ) योधशून्याः । छिन्नान् ( ४८ ) सह सादिभिः ( ५० ) पततः पतितांश्च ( ५० ) पश्यामि[2] ( ५० ) इत्यन्वयः । आरवः ( ४७ ) आरवाः । तोमराः ( ४८ ) सर्वलोहाः । महामात्रः ( ४८ ) हस्त्यारोहः । परिस्तोमाः ( ४८ ) कम्बलाः । कक्षाः[3] ( ४८ ) वरत्राः । ग्रैवेयाणि ( ४९ ) ग्रीवाभरणानि । कणपाः ( ४९ ) मुकुटानि । तूणीरान्[4] ( ४९ ) इषुधीन् । यन्त्राणि ( ४९ ) सावित्रीप्रभृतीनि । तोत्राणि[5] ( ५० ) कर्णमूलतोदनानि । त्सरून् ( ५० ) खड्गमुष्टीन् । छिन्नगात्रावरकरैः ( ५१ ) छिन्नं गात्रं प्रथमं जङ्घादि । अवरो जघन्यो भागः । करः शुण्डः । खलीनानि ( ५३ ) कविकाः । योक्त्राणि ( ५३ ) बन्धनरज्जवः । कुन्थाः[6] ( ५३ ) चर्मयष्टिः । परिस्तोमाः ( ५३ ) चित्रकम्बलाः । प्रासाः ( ५३ ) कुन्ताः । ऋष्टयः[1] ( ५३ ) खड्गाः । महाधनाः ( ५३ ) महामूल्याः । आस्तरणानि ( ५४ ) शय्यानां छादनानि । अपविद्धानि ( ५४ ) पतितानि । प्रोथय[ Fol. 3*a* ]न्त्रैः ( ५५ ) कविकादिभिः । शबलां[7] (५५) चित्राम् । परामृश्य (५६) हित्वा । पञ्चत्वं (५९) मरणम् । संबाधं[8] ( ८० ) संकीर्णम् । पार्ष्णि ( ८५ ) पृष्ठभागम्[2] । पारावता[3] ( ८९ ) वाजप्रवर्त( sic )निभा अश्वा यस्य राज्ञस्तस्य रथे ( ८९ ) कोविदारध्वजं ( ८९ ) युगपत्रध्वजं धृष्टद्युम्नं दृष्ट्वा ( ८९ ) भीमः समाश्वसत् ( ८९ ) इत्यन्वयः । रभसं ( ९९ ) सत्वरम् । आनर्छुः ( ९९ ) आच्छादितवन्तः । वातायमानैः ( १०६ ) वातवदाचरद्भिरितस्ततो गच्छद्भिः ॥

५१

व्यजनानां ( ३१ ) चामराणाम् । यथा कुर्याद्धनंजयः ( ३७ )

१ Apparently Cd reads समुदायं च for दर्शयामास. २ Ed. पश्यामः ; Cd with B2 Da1 Dn D4. 5. 7. 8. ३ Ed. कक्ष्याः ; Cd with K3. ४ Ed. तूणीराणि ; C with K4 B. ५ Ed. तोत्रान् ; Cd with D1 Ca. ६ Ed. कशाः ; Cd by itself. ७ Ed. शबलैः ; Cd with K4 B Da1 Dn D4. 5. 7. 8 S. ८ Ed. असंबाधं ; Cd prob. reads क्षोभयामास संबाधं with D5.

[1] MS. रिष्टयः. [2] MS. °भागा. [3] MS. परावता.

इत्यन्योन्योपमा । **अन्योन्यप्रेक्षया** ( ३९ ) परस्परदर्शनेन ॥ इति भीष्म-पर्वणि द्वितीयमहः ॥

५२

**प्रभातायां तु शर्वर्याम्** ( ५२. १ ) इत्यादेः **चक्रे निवेशं ध्वजिनी कुरूणाम्** ( ५५. १३२ ) इत्यन्तस्यार्जुनपराक्रमातिशयस्तात्पर्यार्थः ॥ **संयाने**[1] ( १ ) समरे । **तुण्डे** ( ३ ) चञ्च्वौ । **अन्वेव** ( १२ ) पश्चादेव ॥

५३

[ **मृत्युं कृत्वा निवर्तनम्** ( २ ) ] स्वस्य[3] परस्य वा मृत्युरेव निवर्तकः, नापरसंत्राणादिः । **अनुमानैः**[2] ( ६ ) ध्वजादिलिङ्गैः । **संज्ञाभिः** ( ६ ) संकेतैः । **परिस्तोमैः** ( २० ) वि[स्तृतैः] । तैरेव क्षुद्रैः **कुथाभिः** ( २० ) । **कम्बलैः** ( २० ) चित्रैः । **स्रग्दामैः** ( २० ) स्रग्घटितैः दामभिः । अनेन स्रजां बाहुल्यं दैर्घ्यं च विवक्षितम् । **अगणेयानि** ( २३ ) असंख्येयानि । **महामात्राः** ( ३० ) प्रधानानि ॥

५४

**कोष्टकीकृत्य** ( २ ) रथमण्डलस्य मध्ये कृत्वा । **मिषतां** ( ११ ) पश्यताम् । **अपोवाह**[4] ( १७ ) अपनीतवान् ॥

५५

**दान्तापीड[3]प्रकर्षिणः** ( १६ ) हस्तियुध्यमानाः ( sic ) । **पिण्डितान्** ( ३० ) एकस्थान् । **वर्मितान्** ( ३० ) कृतसंनाहान् । द्रुह्यं असेति (corrupt) । येन द्वावपि न संहतौ **धावतः** ( ३५ ) । **आक्रन्दे** ( ३७ )

१ Ed. अनुसंयाने; apparently Cd reads अथ संयाने with K2 B1. 2. 4 Da Dn D4. 5. 7. 8. २ Ed. अनुमानेन. ३ For discussion of the v. l. see *Annals BORI*, vol. xxv, pp. 239–243.

[1] MS. संजाने. [2] MS. ववौ. [3] The portion of the comm. from स्वस्य up to संकेतैः is (accidentally) placed at the beginning of the comm. on adhy. 51. [4] MS. आपो वाहे अपनीतत्वात्.



युद्धे । **उल्लिखितं** ( ६० ) लेखनेनाङ्कितः ( sic ) । **अचिरभा** ( ८८ ) विद्युत्[1] । **संवर्तयिष्यन्** ( ९२ ) ...... । **अभिसारात्**[1] ( ९५ ) प्रतिज्ञानात् । **अभीषून्** ( १०२ ) रश्मीन् । **धूमकेतुः** ( १०६ ) अग्निः । प्रतिघ्नाताय जघान यस्मिन् ( corrupt ) । **महापताकाः** ( ११७ ) शत्रु[ध्व]जस्तस्यैवाश्रयो वैजय[ Fol. 3*b* ]न्तीनां येषु । **निकृत्तयन्त्राः** ( ११९ ) निकृत्तं छिन्नं आश्रयभूतं सारियन्त्रं येषाम् । [ **विहितेन्द्रजालाः**[3] ( ११९ ) ] विहितानि इन्द्रजालान्यद्भुतदर्शनानि येषु । **रोधाः** ( १२२ ) तटाः । **शर्करा** ( १२४ ) वालुकाः । **पाताल**( १२४ )शब्देनागाधता विवक्षिता । **शाला[वृ]काः**[4] **रङ्काः** ( १२४ ) श्वशृगालादयः । **संधिः** ( १२८ ) दिनरजन्योरन्तरम् ॥ भीष्मपर्वणि तृतीयमहः ॥

५६

**व्युष्टां निशां भारत भारतानाम्** ( ५६. १ ) इत्यादेः **भ्रातृव्यसनकर्षितैः** (६०. ७९) इत्यन्तस्य दुर्योधनाद[ ँनज]यस्तात्पर्यार्थः ॥ **व्यालाः** (७) सा[ ? मा ]रकगजाः । **चतुश्चतुर्** ( १० ) इति वीप्सा दिगपेक्षया । **वरूथिना** ( ८ ) रथगुप्तिमता । **सूपस्करं** ( ९ ) सुचक्रम् । **सोत्तरबन्धुवेशं** ( ९ ) [ Fol. 4*a* blank† ].

६१

[ Fol. 4*b* ] शरीरे **जय**( ४३–५१ )शब्दः स्वरूपतः पूजायाम् । सर्वातिशयेन वर्तनं तस्यार्थः । **सौम्यात्मजात्मजः** ( ४४ ) । सोमो ब्रह्मा । तस्य पुत्रः सौम्यो मनुः । तस्यात्मजः कश्यपः । तस्मात्मज उपेन्द्रः[3] । सु-

१ Ed. अभियानात्; Cd with K3. 5 D2. 6. २ Apparently Cd reads महापताकोच्छ्र्यवैजयन्त्यः with K3 D1–3. 6. ३ Ed. निहतेन्द्रकीलाः; Cd with Ś1 K3 D6. ४ Apparently Cd reads °शालावृकरङ्क°, which is not found in other MS. ५ Ed. °कर्शितः; Cd with Ś1 K0 B2–4 D1. ६ Apparently Cd reads 56. 8–9 after 56. 10. † Owing to the blank page, there is no commentary from 56. 10 up to 61. 42.

[1] MS. वेद्यत. [2] MS. °कर्षिताः. [3] MS. तस्यात्मजं तमुपेन्द्रः.

**दुःपार**[१] ( ४५ ) सुदुष्कृतयोः पार । महावहे ( sic ) । महत्यौ द्यावापृथिव्यौ रंह-सीति **महोरगः** ( ४७ ) अनन्तः[1] । **हरिकेशः** ( ४७ ) नीलकेशः । हरिमत्रं[2] वासयतीति **हरिवासः** ( ४७ ) । **विशां** ( ४७ ) पुरुषाणाम् । **ईशः** ( ४७ ) । **व्यक्तं** ( ४८ ) दृश्यत्वात् । **अमितानाम**[3]भावेन **स्थाने**[२] ( ४८ ) सर्वाश्रयत्वात् । निगमसृष्ट्यादिनिगमव्यापारात् ( sic ) । **भावः** ( ४८ ) सत्ता । **कृतं** ( ४९ ) संस्कृतम् । **गुह्यात्मन्**[4] ( ५० ) पुर्यष्टकेन । **सर्वभूतात्मन्**[5] ( ५० ) अद्वितीय-त्वात् । **स्फुट**[३] ( ५० ) सुप्रकाशत्वात् । **संभूत**[३] ( ५० ) देवताकारेणावतारात् । [ **संभव** ( ५० ) ] भावेन अवतारकत्वात् । **भूतार्थ[र्थानि]**[४] ( ५० ) निष्पन्न-प्रयोजनभूतानि पृथिव्यादीनि तत्त्वानि पञ्चविंशतिः । **लोकाश्चतुर्दश**, तेषा-**मीशः** ( ५० ) । **भूतविभावन** ( ५० ) भूतव्यञ्जक । [ **आत्मयोने** (५१) ] आत्मा योनिः स्वयंभूः । **महाभाग** ( ५१ ) महाभो[ ? भा]गो यज्ञभागस्य । कल्पनं **कल्पः** ( ५१ ) सृष्टिः, **संक्षयः** ( ५१ ) संहारः, **तत्परः** ( ५१ ) प्रपन्नवान् । **उद्भावनः** ( ५१ ) व्यञ्जकः । [ **मनोद्भाव** ( ५१ ) ] मनसो भाव इत्युत्पत्तिर्यस्य, मनसिज इति यावत् । [ **निसर्गसर्गाभिरत**[५] ( ५२ ) ] निसर्गानन्दः सहजा[ Fol. 5*a* ]नन्दः । **तपः** ( ५५ ) शरीरतापनो धर्मः । **सत्यं** (५५) यथार्थवाक् । [ **धर्मकर्मात्मजं** (५५) ] धर्मरूपस्य[६] कर्मण आत्मजं कार्यम् । **संस्कारः** ( ५६ ) मलहानिः गुणाधिक्यं[6] च । **पक्षिणो**[७] ( ५९ ). गिरितुरगादयः । **वयांसि** ( ५९ ) हंसादयः । **योगः** ( ६८ ) योगफलं पर-मात्मभावः । न विद्यते अन्तो निवृत्तिः एकाग्रतालक्षणयोगश्च[८] । **सेतुं** ( ७० ) विधारकत्वात् ॥

१ °पारे in the MS. may be a scribal error. २ Ed. °स्थान. ३ Does Cd understand स्फुटसंभूतसंभव as three vocatives? ४ Cd understands भूतार्थतत्त्वलोकेश as one word. ५ Cd reading in uncertain. ६ Ed. धर्मः कामात्मजः; Cd धर्मकर्मात्मजं with K3 B2.4 Da Dn D1.3–8. ७ Cd prob. reads 61. 59$^{d}$ as नगपक्षिवयांसि च. ८ Cd apparently reads 61. 70$^{c}$ as अनन्तमध्यं तं with Ś1 Da1 M2.

[1] MS. अनन्न. [2] MS. हरिमित्र. [3] MS. अमितानामाभारेन. [4] MS. गुह्यात्मनः. [5] MS. °भूतात्मनः. [6] MS. गुणाधीनं.



६२

**योगात्** ( २ ) चित्तैकाग्रतायाः । **भूतात्मनः**[१] ( ६ ) अतीतस्वभावस्य । य इमे वषष्टी(sic) भविष्यभवितव्यतयोरपर्यन्तत्वेन बुद्धे[1]रगोचरत्वात् परत्वं भवि-तव्यं तव यशःप्रकाशकत्वात् ॥ **वि[श्व]कर्मणा** ( १७ ) विष्णुना । [ **अर्च्यः** ( २९ ) ] अर्घ्यपुष्पादिभिः । **इज्यः** ( २९ ) यज्ञैः । **अन्यः**[2] ( ३१ ) राक्षसात् । **प्रकृतिः** ( ३३ ) स्वभावः । [ **कृतलक्षणैः** ( ३८ ) ] कृतमनुष्ठानलक्षणं चिह्नं येषाम् ॥

६३

**आगमं** ( १ ) यस्मादागच्छति । **प्रतिष्ठां** ( १ ) अस्मिंस्तिष्ठति । **परं** ( २ ) यस्मान्न दृश्यते ( २ ) तस्मादागमः । **अप्सु वै शयनं चक्रे** ( ४ ) इति आपः प्रतिष्ठायोगादात्मन्येकाग्रतया । **तत्र**[२] ( १२ ) अप्सु । कर्णात्स्रवतीति[3] **स्रोतोभवं**[३] ( १२ ) कर्णमल(sic)भवम् । **अपचितिं** ( १२ ) हानिम् । **यान्तं**[४] ( १२ ) व्रजन्तम् । **कुर्वन्** इति पाठे **अपचितिं** ( १२ ) पूजाम् । [ **ब्रह्मभूतं** ( १६ ) ] ब्रह्मभावं गतम् । [ **योगभूतं** ( १६ ) ] योगेन प्राप्तं विषयीभूतम् ॥

६४

**शरीरोत्थं** ( ६ ) रूपादि, तच्च **अव्यक्तं** ( ६ ) दृश्यादृश्यत्वात् । दृश्या-दृश्यत्वं चेन्द्रियव्यापारे चादर्शनात् । **मनसि स्थितम्** ( ६ ) सुखदुःखेच्छादितश्च व्यक्तं, सति तस्मिन्सदा दृश्यत्वात् ॥ विश्वोपाख्यानं समाप्तम् ॥

६५

**व्युषितायां च शर्वर्याम्** ( ६५. १ ) इत्यादेः **कुरवश्च य**[ Fol. 5*b* ]**था-विधि** ( ७०. ३७ ) इत्यन्तस्यार्जुनपौरुषातिशयस्तात्पर्यार्थः ॥ हे **मारिष** ( २० ) पण्डित ॥

१ Ed. भूतात्मा यः; Cd with Ś1 Ko–3. २ Cd apparently तत्र for चापि. ३ Ed. °स्रोतोद्भवं; Cd with K3.4 B1 Dn2 D4.7 Ca. ४ Ed. कुर्वन्; Cd with B2–4 D1.3 Ca.6.

[1] MS. शुद्धेर्. [2] MS. अन्ये. [3] MS. कर्णा स्रवतीति.

### ६६

**रजांस्येव** मेघाः, **शस्त्राण्येव** विद्युतः ( ११ )। **आयोधनं** ( 277* ) युद्धम् ॥

### ६७

**शक्रस्य** ( ५ )। **कांदिग्भूताः** ( ८ ) भयद्रुता जाता इत्यर्थः । **भ्रान्तपत्राः**[2] ( ८ ) भ्रान्तवाहनाः । **आर्तायनं** ( ९ ) भीतानां गतिः । **व्यवालीयन्त**[3] ( ११ ) व्यवधानलक्षणं लयं कृतवन्तः । **काम्बोजैः** ( १२ )काम्बोजदेशोद्भवैरश्वैः । **नीडं** ( ३० ) रथिनिवासभूः । **वीतमाददिरे**[4] ( ३४ ) पलायिताः । **नागवारः**[5] ( ३७ ) शेषः । **रथान् विकर्षन्तो वारणाः सर्वा दिशः संपेतुः** ( ३९ ) इत्यन्वयः । **सर्वशब्दः** ( ३९ ) गायत्रशब्दः, तत्र गच्छन्तीति यावत् । **रूपं** ( ४० ) मण्डनम् । नलिनीजालमिव **विषक्तं**[1] ( ४० ) मुक्तम् । परि चिः ( corrupt ) ॥

### ६८

[ नि ]**कृतः** ( ६ ) वञ्चितः । **नभसि** ( १२ ) आकुले सूर्यरश्मिभिः दुष्प्रेक्ष्ये ॥

### ७०

[ **लोहितायति** ( ३१ ) ] लोहितं रुधिरं[2] तद्वदाचरति । **अवहारः** ( ३५ ) युद्धनिवारणम् ॥ इति पञ्चमो युद्धदिवसः ॥

### ७१

**विहृत्य**[6] **ते ततो राजन्** ( ७१. १ ) इत्यादेः **संहृष्टः शिबिरं ययौ** ( ७५. ५९ ) इत्यन्तस्य भीमधृष्टद्युम्नयोः पराक्रमातिशयस्तात्पर्यार्थः ॥ **कल्प्यतां**[3]

१ 277* is inserted by N. २ Ed. श्रान्तपत्राः; **Cd** by itself. ३ Ed. व्यव॰; **Cd** with Ś$_1$ K$_4$ B$_{1.2}$ Da Dn D$_{3-5.7.8}$ **Cap.** c. ४ Ed. वीतम्; **Cd** with Ś$_1$ K$_{0-3}$ B$_{2-4}$ Da Dn$_1$ D$_2$ (before corr.). $_{3-5.7}$ T$_2$ **Ca**. ५ Ed. नागराज-; **Cd** by itself. ६ Ed. विहृत्य च ततो; **Cd** by itself.

1 MS. विसक्तं. 2 MS. रुचिरं. 3 MS. कल्पतां.



( २ ) संनह्यमानानाम् । यथा **समदा वराङ्गना** ( ३३ ) समागमं पश्यति तत्र तत्र मुह्यति ॥

### ७२

**अभिज्ञानं**[1] (२) सर्वज्ञानम् । केषां संधिः ( sic )। **सर्वकामं मनोऽस्माकं**[2] ( ? २ )। प्राधान्यतः । **लघुवृत्तं** ( ३ )। शीघ्रव्यापारम् । **आयतप्रायं** ( ३ ) प्राप्तिबहुलम् । **सारगात्रं** ( ३ )। **अनामयं** ( ३ ) निर्व्याधि । **नियुद्धे** ( ४ ) बाहुयुद्धे । **प्रासः** ( ५ ) कुन्तः । **ऋष्टिः** ( ५ ) खड्गः । **भिण्डिपालेषु** ( ५ ) गोफणेषु[1] । **कणपेषु** ( ६ ) मुकुरेषु । **अपरोक्षं** ( ७ ) प्रत्यक्षदर्शी । **आरोहे** ( ८ ) हस्त्यादीनाम् । **प्रत्यवस्कन्दे** ( ८ ) हस्त्यादिभ्योऽवतरणे । **सरणे** ( ८ ) प्रसरणे । [ Fol. 6*a* ] **सान्तरप्लुते**[2] ( ८ ) मध्यप्लवयुते । **याने** ( ८ ) प्रतिगमने । **व्यपयाने** ( ८ ) पलायमाने नेहातिवर्तते । **वेतनेन** ( ९ ) मूल्येन । **गोष्ठ्या** ( १० ) प्रियवचनेन । **नोपचारेण** ( १० ) पूजया[3] । **न बन्धुनिमित्ततः** ( १० ) बन्धुभावेन । [ न ] **सौहृदबलैः** ( १० ) न मित्रबलैः । [ **कुलेन**[3] ( १० ) ] कुलीनतमाय । [ **परिग्रहैः** ( १० ) ] परिग्रहोन्नतेन । किंतु **वेतनेनोपपादितः**[4] ( ९ ) पूर्वेणान्वयः । **आर्यं** ( ११ ) पण्डितम् । **मनस्वी** ( ११ ) साहंकारः । [ **पक्षिसंकाशैः**[4] ( १४ ) ] पक्षिसदृशैः वेगवत्तया । **रत्नपट्टैः**[5] ( १६ ) रत्नरूप ( sic )। **समन्वितं**[5] ( १६ ) अलंकृतम् । **दिष्टं** ( १९ ) दैवम् । **यथागमं**[6] ( २५ ) आगममनतिक्रम्य ॥

### ७३

[ **धर्मसंकरकारिते** ( १ ) ] धर्मस्य दूतधर्मस्य संकरो मायाकृतेनाधर्मेण योगः, तेन कारिते युद्धे । त्वं यान्यनृतानि **दृष्टवान्** ( १ ) **न तानि दुर्योधन**

१ Ed. अभिकामं; **Cd** alone. २ New pāda ? ३ Ed. नाकुलीन॰; **Cd** with K$_{1.2}$. ४ Ed. पक्षसंकाशैः; **Cd** with B$_{1.3.4}$ Dn D$_{1.3.4.6-8}$ **Ca**. ५ Ed. रत्नपट्टेन संचितम्; **Cd** by itself. ६ Ed. यथागतं; **Cd** with M$_{1.3-5}$.

[1] MS. गोफलेषु. [2] MS. सत्येवप्लुते ( sic ). [3] MS. पूजाया. [4] MS. वेदनोपादितः.

इत्यन्वयः । **संघर्षः** ( २३ ) एकत्र मिलितानां घनता । **एकायनं** ( २७ ) एकमेव शरणं मार्गः[1] । **अस्वस्ति** ( २८ ) अकल्याणम् । **निःशल्यं** ( ३८ ) गात्रेभ्य उद्धृतशल्यम्[2] । **राजगृद्धी** ( ४८ ) राजरक्षी[3] । मदेन ( ५७ ) यौवन-मदेन **मूर्छा**[4] ( ५७ ) कर्तव्याप्रतिपत्तिः, तया **अन्विता** ( ५७ ) यथा **आत्मानं** ( ५७ ) वारितुं पुरुषेभ्यो निवारयितुं न शक्नोति तथा[5] पलायमानां सेनां निवार-यितुं न शक्ता इत्यर्थः ॥

७४

**परासुकरणं** ( ४ ) मारणम् । **पशुगणान्** ( २९ ) कालवञ्चनानभि-ज्ञान् ॥

७५

**संग्रामरभसो** ( १ ) युद्धसत्वाः ( sic ) । **प्रणोत्स्यामि** ( ४ ) स्फोट-यिष्यामि । **दुरोदरो** ( ५ ) द्यूतकारः ॥ इति षष्ठो युद्धदिवसः समाप्तः ॥

७६

**अथ शूरा महाराज** (७६.१) इत्यादेः **प्रेक्षणीये बभूवतुः**[6] (८२. ५६) इत्यन्तस्य पाण्डवानां दुर्जयत्वं तात्पर्यार्थः ॥ **जातमन्युं** ( ७ ) जातशोकम् । **नाच्छादयते**[१] ( sic ; ८ ) न तिरोदधामि । [ Fol. 6*b* ] **प्रतीतः** ( १२ ) प्रत्ययं गतः । **आदियुगे** ( १८ ) कृतयुगे । **तदानीम्** ( १८ ) अनर्घकाले[7] । **रूपम्** ( १९ ) आकारः । **वर्णो** ( १९ ) गौरादिः ॥

७७

**प्रत्यङ्मुखं**[२] ( २० ) पश्चिममुखम् ॥

७८

**भीमः** ( ९ ) भयानकः । **अभीषवः** ( ११ ) प्रग्रहाः । **श्वेतं** ( १२ )

१ Ed. न चात्मानं छादयेऽहं. २ Ed. °ङ्मुखो ; **Cd** alone.

[1] MS. मार्गे. [2] MS. उद्धृतमशल्यै( sic ). [3] MS. राजरक्षा. [4] MS. मूर्छेव मूर्छा. [5] MS. यथा. [6] MS. ववभूरित्यंतस्य. [7] MS. अघनकाले.



शुभ्रम् । **शरावरम्** ( २८ ) । **आविध्य**[1] ( ३३ ) भ्रामयित्वा । **विजयात्** ( ३९ ) अर्जुनात् ॥

७९

**धृत्या** ( २ ) प्रगल्भता[त्वा]त् । **निष्टानकः** ( ३० ) क्रन्दनशब्दः । **अपोवाह** ( ५२ ) निःसारितवान् ॥

८२

इति सप्तमो युद्धदिवसः ॥

८३

**परिणाम्य निशां तां तु** ( ८३. १ ) इत्यादेः **गमयामास पार्थिवः** (९४.२०) इत्यन्तस्येश्वरेच्छानुगृहीतं पाण्डवानां पौरुषं तात्पर्यार्थः ॥ **आस्फोटितं** ( २३ ) द्विगुणवान् कर्पटाघातः । **उत्क्रुष्टं** ( २३ ) टंकारः । **नखरः** ( ३५ ) कर्तरी । **आर्षभं**[2] ( ३० ) वृषभचर्म ॥

८४

**निष्टानकः**[3] ( ९ ) सव्यथः शब्दः । **घोरः** ( ९ ) कटुः । **भयानकः** ( १० ) हृदयदारी ॥

८६

**क्रोडः** ( १७ ) उत्सङ्गः । **घोणा** ( १७ ) नासा । एतेन घटना चोक्ता । **तक्ष्यमाणाः**[२] ( २१ ) ॥

८७

**कालः**[4] ( ७ ) मृत्युः । **अन्तकः** ( ७ ) मरणम् । एतेनानिवर्तनीयत्वं दर्शितम् ॥

८८

**अपक्रमणे**[5] ( १२ ) अपसरणे ॥

१ Ed. हृष्ट ; **Cd** alone. २ Ed. तक्ष° ; **Cd** with K5.

[1] MS. आविद्धं. [2] MS. रार्षभं. [3] MS. निष्टातकः. [4] MS. कलौ. [5] MS. प्रक्रमे.

८९

**वैशसे** ( २३ ) युद्धे । **निरवग्रहाः** ( ३७ ) अवारिताः ॥

९०

[ **कर्मारपायितान्** ( ३२ ) ] कर्मारो लोहकारः । तैलपायितान् कुन्द-धौतान् ॥

९१

**सप्तधा** (३२) गण्डद्वये नेत्रे[1] कर्णद्वये मुखे च । **परः[शतान्]** (३५) असंख्यातान्[2] । [ **उपावृत्तमदः** ( ४७ ) ] उपावृत्तो निवृत्तो मदो यस्य । **अमर्षात्** ( ५१ ) क्रोधात् । **साध्वसं** ( ५१ ) भयम् । **संचुकोच** ( ५४ ) संकुचितः । **विकृतः**[1] ( ५६ ) विकृतगण्डः ॥

९२

**गोवृषो** ( ३१ ) गोश्रेष्ठः । **अपविद्धानि** ( ४७ ) पतितानि । **कलापाः**[3] ( ४७ ) तूणीराणि नित्यरज्जूर्वा । **निर्मुक्तः** ( ४८ ) मुक्तकञ्चुकः । **तोमरावापः**[2] ( ५२ ) तोमरावरणम् । **स्रस्तजिह्वैः** ( ६३ ) पातितरसनैः । **विघाटिकाभिः**[3] ( ६८ ) प्रयुक्ताभिः । **कुथाभिः** ( ६८ ) कम्बलैः । **उरश्छदैः** ( ७० ) कवचैः । **घोरे** ( ७८ ) भयंकरे । **रौद्रैः**[4] ( ७८ ) प्रचण्डैः । **सुदारुणे** ( ७८ ) महाभये ॥

९३

**निकृतिद्वयम्** ( ? ६ ) । **न्यासय** ( १२ ) पातय । **अनुयातम्** (१५) अनुचरः । [ **भण्डीति** ( २१ ) ।] महांति ( sic ) पूर्वदेशे प्रसिद्धम् । **परार्ध्येन**[5] ( २१ ) उत्कृष्टेन । **अरजः** ( २२ ) रजःसंसर्गे[4] न संदर्शनेऽनुकूलः । [ **शैक्षं** ( २७ ) ] शैक्षिकं शिक्षोचितम् । **स्पर्धे** ( ? ३४ ) संघर्षः ॥

१ Ed. विकटः ; Cd alone. २ Ed. तोमरांश्चापि ; Cd with Ś1 Ko. ३ Ed. विघाटितविचित्राभिः ; Cd apparently विघाटिकाभिश्चित्राभिः, not found elsewhere. ४ Ed. रौद्रे ; Cd alone. ५ Ed. पराध्येन ; Cd with Ko. 2. 3 Da1 D2. 5. 6 T2 Cc.

[1] MS. त्रये. Cf. हस्त्यायुर्वेद २३. ४ करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च परिश्रुतेः । [2] MS. °ख्यातः. [3] MS. कालापाः. [4] MS. रजःसंसर्गानसंदर्शने.



९४

**पर्यासं** ( ५ ) समक्षम् । **क्षयं** ( २० ) गृहम् ॥ इत्यष्टमो दिवसः ॥

९५

**प्रभातायां तु शर्वर्यां** ( ९५. १ ) इत्यादेः **पाण्डवाश्च तथा भीष्मं** ( १०४. १ ) इत्यन्तस्य भीष्मस्य अर्जुनादन्येन दुरुपसंहारस्तात्पर्यार्थः ॥ **प्रत्यादेशं** ( २ ) आक्षेपम् । **निर्वेदं** ( ३ ) खेदम् । **आर्य** ( ? ) पण्डितम् । **संप्रहारं** ( ४४ ) युद्धम् । **वलाः**[1] ( ५० ) काकाः । **वायसाः** ( ५० ) द्रोणकाकाः । **अभ्याहतानां**[2] ( ५३ ) अभिमुखोत्तरकालहतानाम् ॥

९६

**पिशङ्गः** ( १ ) पिङ्गलः । **सर्वपारशवैः** ( ३७ ) सर्वलोहैः । **कटुकोदयः** ( ५१ ) श्मशानोदयः ॥

९८

**गहने** ( ७ ) वने । **अभ्रघनान्**[1] ( १७ ) सान्द्रान्[2]घनान् ॥

९९

**आगस्कृत्** ( ४२ ) अपराधकारी ॥

१००

**महामात्रौ** ( २० ) प्रधानपुरुषौ । **व्यंसयामास**[4] ( ३० ) वञ्चयामास ॥

१०२

**आक्रन्दे** ( २७, ५६ ) युद्धे । **मणिः** ( ५७ ) इन्द्रनीलः । **अन्वगेव**[3] ( ६२ ) पश्चादेव । **आपूर्णं**[3] ( ६९ ) कलकाभिरिति शेषः ॥

१०३

**द्वीपौ** ( ३४ ) यथा मज्जतां[4]माश्रयः । **उपप्लवे**[5] ( ३५ ) विराटनगरे ।

१ Ed. बकवायसाः ; Cd with T G1. 2. 4 M4. २ Ed. अभ्यायतीनां ; Cd alone. ३ Ed. °गणानिव ; Cd with K3. 5 D2. 3. ४ Ed. ध्वंसया° ; Cd with K2. 4 B Da Dn D3–5. 7. 8 M. ५ Ed. उपप्लव्ये ; Cd with Ko Da1 D5.

[1] MS. अभ्रं घनात्. [2] MS. सान्दात् घनात्. [3] MS. आपूरणे. [4] MS. सज्जताम्.

**विपरीतं** ( ३९ ) प्रकृतेरिति शेषः । **गतसत्त्वो** ( ३९ ) गतबुद्धिः । **द्रौपदो** ( ७५ ) द्रुपदपुत्रः । **दुष्पोषे** ( ७३ ) निर्धनबहुकलत्रे । **अमङ्गल्यध्वजे** (७४) नपुंसके । **परुषीकृतः** ( ८६ ) कठिनदेहकृतः । [ Fol. 7*b* ] **पूर्वेन्द्र** ( ९२ ) पूर्वं कारणमिन्द्रो यस्य । **आततायिनं** ( ९५ ) वधोद्यतं, घातकमित्यन्ये । आततायिभ्यो व्यावर्तयति घातकम् ( ९५ ) आततायिनम् । **अन्यान्** ( ९९ ) नान्यं, तत्रापि प्रगतं समीपस्थम् । उपलक्षणमेतत् हननसामग्रीसमवधानस्य । तेन पलायनादिभिरपि वञ्चयितुं शक्यते, तथापि न हन्यत इति भावः ॥ इति नवमो युद्धदिवसः ॥

१०४

**ततस्ते पाण्डवाः सर्वे** ( १०४. २ )[†] इत्यादेः **वचनं पार्थिवोत्तम** (११५.६५) इत्यन्तस्य भीष्मादीनां कथमुपसंहारः । सत्यम् । इह भारते वर्षे कालप्रभावोपसंहृतसर्ववंशे सर्ववंशसारया वसुंधरया धर्मवतामतीतवर्तमानजन्मार्जितसुकृतानुरूपं भोगसंपादनमेव भारं मन्यमान(त)या सुकृतानुरूपे भोगसंपादनक्षमे लोकान्तरे तेषां गमनं प्रार्थितमुपसंहियते । यथा दरिद्रस्यापि भारः अधार्मिकानां तु धर्मस्य तामस्यगुरुत्वाद्( sic ) व्यक्तमेव भारत्वमिति युक्त उपसंहारः ॥ **काल्यमानं** ( २२ ) विद्राव्यमानम् ॥ **अञ्जलिकैः** ( ३० ) अञ्जल्याकारफलिभिः । **अमितं** (३१) व्यक्तापेक्षया वा । **कामं** (४१) यथेष्टम् । **अभ्यस** (४१) ॥

१०५

**रथसिंहो** ( ४ ) रथप्रतिबन्धः । **पालः** ( १७ ) रक्षिता । **काल्यते** ( १७ ) विद्राव्यते । **स्थाने** ( २१ ) युद्धे निवृत्तौ । [ **संधारयन्** ( २३ ) ] धैर्यं स्थापयन् ॥

१ Ed. °रीतः; **Cd** by itself. २ Ed. दुष्प्रेक्ष्ये; **Cd** alone. ३ Ed. °भङ्गो; **Cd** ( to judge by its paraphrase ) reads °संगो with Ś1 Ko. 1, 3 D2. 3.
† This need not necessarily mean that **Cd** om. 104. 1 with Ko. 1.

1 MS. प्राकृतेः. 2 MS. पुरुषी°. 3 MS. कलं. 4 MS. °संहृतसर्ववंशसर्ववंशे सारया. 5 MS. °नुरूपं. 6 MS. कल्य°. 7 MS. व्यक्तपे°. 8 MS. अभ्यस्यत्. 9 MS. °बन्ध-. 10 MS. स्थापयत्.



१०६

**दंशितः** ( ५ ) रणोद्यतः ॥

१०८

**यो[ग]म्** ( ५ ) अतो मया एकीभावः । **शान्तानि** ( ६ ) परपक्षे, **घोराणि** ( ६ ) आत्मपक्षे । **रसते** ( ७ ) शब्दं करोति । **व्यथते** ( ७ ) कम्पते । **अनुष्टनति** ( ७ ) भयेन शब्दं करोति । **परिघः** ( ९ ) रश्मिदण्डः । **अ[वाक्शि]रा** ( १२ ) वसुधाधोमुखकोटिद्वयः । **आयोधनं** ( १७ ) रणम् । **अमङ्गल्यध्वजः** ( १९ ) नपुंसकः । अर्जुनेन **कुरुवृद्धस्य** ( २० ) उपद्रवणं पीडनं, **युधिष्ठिरस्य [च] क्रोधः** (२१) [अ]वन्ध्यः । **भीमार्जुनयोः** (२१) [ Fol. 8*a* ] संगतमुक्त्वा क्रोधः । तद्द्वयमवन्ध्यम् । अनेन लिङ्गेन उपद्रवणं पीडनं **प्रजा[नां]** ( २१ ) मम **ध्रुवं** ( २१ ) सत्यं मेऽनुमीयते । [**निमित्तज्ञश्च** ( २२ ) ] निमित्ततमर्हन्ति यावत् ( sic ) । **तस्य** ( ३२ ) युधिष्ठिरस्य विशेषणम् । **तपोदावशरीरस्य** ( ३२ ) इति । **मन्युः** ( ३२ ) शोको द्यूतादिपरिभवजनित एव । स **प्रभवः** ( ३२ ) कारणं यस्य स **कोपः धार्तराष्ट्रस्य सुदुर्मतीं** (३२) सेनां हन्तीत्यन्वयः । **पाञ्चालं** ( ३५ ) द्रुपदम् । **राज्ञः** ( ३६ ) युधिष्ठिरस्य ॥

११०

**बर्हिणवाहिनां** ( २३ ) मयूरपक्षिणाम् । **ग्रहः** ( ४३ ) पक्षः । **तत्र हि** ( ४३ ) भीष्मेति निमित्तं यस्मात् द्यूतकर्तृ दुर्योधनमयो ( sic ) । द्यूतफलमाह । **विज[या]य** ( ४३ ) इति ॥

१११

**निरविद्यत** ( १० ) निर्वेदं जगाम ॥

१ Ed. शान्तासु ; **Cd** with K3. 4 B3 **Cc**. २ Ed. धार्तराष्ट्रस्य दुर्मतेः ; **Cd** alone. ३ **Cd** gloss for वाहिनीम् ( for भारतान् ) in 32$^{d}$ with B3 T1 G ? ४ Ed. °वाजानां ; **Cd** alone. ५ Ed. ग्लहः ; **Cd** with K2. 3. 5 D2. 5 **Cc**.

1 MS. °पक्षो. 2 MS. अरावासुदेवोमुखक°. 3 MS. गुरु°. 4 MS. संगीते मुक्त्वा. 5 MS. °दाव may have been meant for °दग्ध.

### ११२

**समुद्यं** ( ४३ ) संग्रामम् ॥

### ११४

**शतह्रदा** ( २९ ) विद्युत् । **कालीं** ( ३३ ) सत्यवतीम् । **निधने** ( ३६ ) अवसाने । **पृषतैः** ( ३६ ) बिन्दुभिः ।

**अर्जुनस्य इमे बाणा[1] नेते[? मे] वाणा[1]ः शिखण्डिनः ।**
**कृन्तन्ति मम गात्राणि माघमासे गवा इ[वामि]व ॥ ६०**

**इमे** मर्मभेदकतया अनुमीयमाना **अर्जुनस्य बाणा न शिखण्डिन इमे** । द्विरुपन्यासोऽर्जुनसंबन्धितया निषेधात् । **कृन्तन्ति मम गात्राणि** । यथोक्तप्रतिषेधलिङ्गभूतानां लाघवादिक्रियाणामुपलक्षणम् । अत्र दृष्टान्तः । **अर्जुनस्य** धवलस्य चन्द्रस्येति यावत् । वणन्ति शब्दं कुर्वन्ति वणाः सलिलानि, तेषामिमे विकारा **वाणाः** । शिशिराणि **माघमासे** शिशिरर्तुप्रथमभागे **गवां** सूर्यरश्मीनां गायत्रीव **गात्राणि** शरीरावयवान् । दाहप्रकारभरंस्यादि ( sic ) **कृन्तन्ति** छिन्दन्ति । **इव**शब्द [ Fol. 8*b* ] उपमायाम् । अत्र चेदं विवक्षितम् । यथा सूर्यरश्मीनां कारणभूतानां कार्यरश्मिभिश्चन्द्ररश्मिभिः कर्तनम् । कार्यत्वं च रश्मीनां सूर्यरश्मीनामेव चन्द्रे अनुप्रवेशात् । तथा द्रोणाद्यध्यापकद्वारेण ग्राहितैरस्मत्कार्यभूतैरर्जुनबाणैरस्मत्कार्यभूतैरस्मन्मर्मणां कारणभूतानां छेदनम् । अथ वा । वणन्ति शब्दान्कुर्वन्तीति **वाणाः** पुत्राः । **आसेगवौ[वां]** कर्कटानां गात्रं कृन्तन्ति । **माघं** मघाभावो यथा भवन्ति[ ? ति ] । कर्कटानां मघाभावस्तिर्यक्त्वात् । अर्जुनस्य तु युद्धेनाततायिवधस्य विहितत्वात् ।

**ऐश्वर्यभूतः** ( ९८ ) ऐश्वर्यं प्राप्तः । **उरु[2]ग्राहः** ( १०४ ) [2]ऊरुस्तम्भः । **अतर्कितः** ( १०५ ) अचिन्तितः । **परत्र च परा गतिः[3]** ( १०७ ) । संग्रामे

१ Ed. बाणा in both places. Ed. also transp. $60^{ab}$ and $60^{cd}$. २ Ed. ऊरु° ; Cd with K3 Da1 Dn D7. 8. ३ Ed. परां गतिम् ; Cd alone.

[1] MS. °माणा. [2] MS. उरु°.



शत्रुवधस्य पुण्यहेतुत्वात् । **महोपनिषदं** ( ११२ ) महारहस्यं । **ज्ञानं[1]** (११२) ज्ञानयोगम् । **जपन्** ( ११२ ) । ॐकारमिति शेषः ॥

### ११५

**अश्मसारं** ( ४ ) लोहम् । **सीमावृक्षे** ( ९ ) मर्यादातरौ । **उपधानं** ( ३२ ) गण्डूकम् । **व्यवसायपुरोजवः[1]** ( ४१ ) निश्चयपुरःसरैः[2] । **उद्गृह्णात्** ( ४२ ) चिक्षेप । **उपासिष्ये** ( ५० ) आराधयिष्ये । चक्षुषा हन्तीति **चक्षुर्हणम्** ( ६२ ) ॥

### ११६

**व्युष्टायां [तु] महाराज** (११६. १) इत्यादेः **यायात्** ....... **प्रति** (११७. ३४) इत्यन्तस्यार्जुनगुणोत्कर्षस्तात्पर्यार्थः ॥ **पृथग्जनाः** (३) प्राकृताः । **समभ्ययुः** ( ३ ) पूजया अभिगताः । **भूतानि** ( ३ ) देवमनुष्यसिद्धा[3]दीनि । **तमोनुदं** ( ३ ) रविम् । **वारा[4]ः** ( ४ ) [5]वरणीयाः । **अन्वासन्त[2]** ( ६ ) सेवितवन्तः । अस्त्रशस्त्राः पुरः शस्त्रं वा (corrupt) । **उच्चावचान्** ( ११ ) [ Fol. 9*a* ] नानाविधान् । तथा [ **रथेषु[3]भिः** ( १७ ) ] रथिनस्तेषामिषुभिः । [ **विकुर्वतः** ( २५ ) ] सर्वलोकापेक्षया विशेषमपि कुर्वतः । **व्यधर्[4]मन्** ( २७ ) भ्रामितवन्तः । **परीतबुद्धिः** (३५) परि वर्जयित्वा इता गता बुद्धिर्यस्य । **सौहृदानां[5]** ( ४७ ) सुहृत्संबन्धिनाम् । **एतदन्ताः** ( ५० ) एष भीष्मोऽन्तोऽवसानं येषाम् । **स्थ** ( ५० ) भवथ । [ **यत्वा** ( ५१ ) ] **आत्मानम्** (५१) आत्मन्येव योज्य । आत्मानमिति शेषः ॥

### ११७

**जन्मशय्याम्** ( ३ ) प्रसूतिरायाह ( sic ) । **वृषः[6]** ( ४ ) **कर्णः** ।

१ Ed. योगम् ; Cd alone. २ Ed. °सत ; Cd with K2. 4 B D ( except Da2 D5 ). ३ Ed. महेषुभिः ; Cd with K3. 5. ४ Ed. व्याविध्यन् ; Cd alone. ५ Ed. सौहृदं वा ; Cd with K3. 5 D2.

[1] MS. °पराजय. [2] MS. °पुरःसराः. [3] MS. °सिद्धादीन्. [4] MS. धाराः. [5] MS. धरणीयाः. [6] MS. वृष.

**अक्षिगतः** ( ५ ) द्वेष्यः[1] । **अनागाः** ( ५ ) अनपराधः[2] । **बाल्ये** ( ६ ) श्लेषणचर्मणा ( sic ) । **रहिते**[१] ( ७ ) एकान्ते । **धिष्ण्यं** ( ७ ) गृहम् । **अवकीर्णः** ( २२ ) त्यक्तः । **वृत्तवान्** ( ३० ) चरितवान् । अपगमन् सद्यः ( corrupt ) । यस्माद् **यतो धर्मस्ततो** जयः ( ३३ ) इति ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीदेवबोधकृतमहाभारतदीपिकायां भीष्मपर्वव्याख्यानं[3] समाप्तम् ॥ ॥

श्रीशाके १६८८ आश्विन सुदि ५ बुधे लिखितमिदं रामभद्रपंतेन ॥ ॥

---

१ Ed. रहितं ; Cd alone.

1 MS. द्विष्यः. 2 MS. °राधाः. 3 MS. °पर्वाख्यानं.